॥ श्रीसीतारामचन्द्राभ्यां नमः ॥
॥ श्रीमते रामानन्दाचार्याय नमः ॥
॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥

## अग्निकृत

# ॥ सीतास्तुतिः ॥

*This text has been prepared by*
*Vishal Pandey (B.Tech IIT Kanpur)*
*with the blessings of*
***Citrakūṭa Tulasīpīṭhādhiśvara***
***Jagadguru Rāmānandācārya***
***Śrī Svāmī Rāmabhadrācārya***

# अग्निरुवाच

तव नखरुचिद्योत्तैः पारेपरार्द्धरविप्रभा भवति सततं मन्दीभूता प्रमोदवनेश्वरि।
अथ यदि भवत्कारुण्याब्धेरुतञ्चतिवीचिका शिथिलप्रायप्राणोऽप्यशोभत सूर्यवत्॥ १॥

जननि मयका प्राप्तं तेजस्त्वदीयनखत्विषस्त्रिभुवनमहाराज्यमप्यणुमासते।
यदिदमखिललोके पूर्णं महः प्रविलोक्यते तदपि तव चेद् दृष्टं रूपं भवत्यणुमात्रकम्॥ २॥

दिनमणिः स्वो मुक्तामाणिक्यहीरमाणिप्रभा हिमकरकलाकान्तिस्तोमः सुवर्णमरीचयः।
यदिहभुवने दिव्यं भौमं तथा करजं महः सकलमपि तन्मन्ये तावन्मदङ्गकलोद्भवम्॥ ३॥

मयि पुनरदस्तेजोमात्रं त्वदीयतनुप्रभा वितरणभव मातः का ते रुचामियतीस्तुतिः।
परमपुरुषप्राणप्रेयस्तमे भवतीपरं कलयसि कलाकलापं यत्सत्त्वं तदूर्जितमात्मना॥ ४॥

इयतिविभवे तासा भासामहो सुमहापदे जयति भवती सीतेमूर्द्धाभिषिक्त पदागमैः।
तदपि च न ते दृष्टःक्वापिध्रुवंमनसिस्मयो न भवति यतःकाचित्कोटिर्भवत्प्रतियोगिनी॥ ५॥

प्रमुदविपिनक्रोडक्रीडापरा परपूरुषप्रणयपदवीसीमा सामानुग्रहभाजनम्।
कलयकलयप्रेम्णा श्रीमत्यदाम्बुजयोः परं विधिहरिहरश्रीशेषेन्द्राद्युपासितमात्रयोः॥ ६॥

परमपुरुषार्थस्ते लीलारसात्मकविग्रहेप्रमुदविपिनान्तश्रीः संयोगविप्रयुजात्मिका।
विधिहरिहराद्यन्तर्निष्ठैः सुरैः समुपासिता प्रकृतिमधुराकारा धारामृतद्रवरूपिणी॥ ७॥

रसिकणिना युक्ता रामेन्दुनाप्रमुदाटवी प्रकटविलसद्रूपा गोपालिकापटुवोशिनी।
उदयसिकलाकोटिज्योत्स्नमयीमधुराकृतिर्निजरसमहामग्नानन्दोदधेः स्वसखीगणैः॥ ८॥

तव हि रमणः प्रोक्तः श्रीरामचन्द्र इति श्रुतौ तदुदयपदंश्रीर्मायाख्या श्रुताभवतीपुनः।
त्वपि सतिभवेत्सद्बुद्धिश्चेज्जनो न विमुच्यतेनियतमथ तज्जायेतज्ञानंयदीश्वरगोचरा॥ ९॥

नमो महाचिदानन्दिनीशक्तिसमेताय विश्वोदयस्थितिसंहरणामितलीलाशालिने
महाभागैकरसिकाय प्रमोदवनविलासिने प्रमोदवननिकेतनचमत्कारकस्वानन्द
भयनित्यनिरवधिविलासप्रेमास्पदस्वरूपाय रामाय॥ १०॥

तुभ्यं च नमस्तदेकविहारिण्यै ब्रह्मानन्दैकप्रतिष्ठायै संयोगसुधातरङ्गिण्यै
वियोगहुताशकवलीकृताशेषव्यतिरिक्तभावायै ज्वालामालिन्यै
प्रज्वलन्महाभावानलज्वालानुरागरसिकायै गोपेश्वर्यै जनकनरेन्द्रतनयायै
तत्र श्रीनन्दनदुहित्रे श्रीराजिनीगर्भैकमहांशु मालिमाणीक्यमालायै
श्रीसुखितगवेन्द्रनन्दनप्रेमैकभाजनायै श्रीमाङ्गल्यकालालनललितविग्रहायै
निरवग्रहानुग्रहपात्रीकृतनिजजनपरिवेष्टितायै परमपुरुषोरूप
प्रकटिताशेषपुमर्थधोरिण्यै सुधारसद्रवशीतायै सीतायै ॥ ११ ॥

इत्थमुक्त्वा स्तुतिं तस्यास्त्रिवेदीरूढसत्पदाम् ।
दण्डवन्न्यपतश्चाग्निराधिदैविकरूपधृक् ॥ १२ ॥

# इति श्रीमदादिरामायणे ब्रह्मभुशुण्डसंवादे पश्चिमखण्डे सीताजन्मोत्सवे देवस्तुतावेकविंशोऽध्यायः ॥ २१ ॥